# आपिशलिशिक्षा

अथ शिक्षां प्रवक्ष्यामि मतामापिशलेर्मुनेः
गुरुलघ्वादिविज्ञानं तस्यारम्भप्रयोजकम्
उक्तं तत् सर्वमङ्गेषु शिक्षाव्याकरणेषु यत्  १

विकल्पभाजां शास्त्राणामपि दृष्टानुवर्तिनाम्
तत्तच्छाखाविशेषेषु व्यवस्थार्थमिदं स्मृतम्  २

संहिता तत्पदाध्यायः क्रमाध्याय इति त्रिधा
प्रसिद्धोऽस्य समाम्नायो विषयो वक्ष्यते ततः  ३

व्यवस्थितेषु कार्येषु तद्वत् त्रिष्विह केषुचित्
कार्यान्तराणां तन्मूलाद् व्यवस्था सुगमा भवेत्  ४

तस्मात् तत्तत्समाम्नाये प्रातिशाख्याविरोधतः
कार्यं सर्वं व्यवस्थाप्यं शिक्षाव्याकरणोदितम्  ५

स्वराः स्पर्शास्तथान्तस्था ऊष्माणश्चाथ दर्शिताः
विसर्गानुस्वारळाश्चानुनासिक्याः पञ्च चोदिताः  ६

ह्रस्वदीर्घप्लुतावर्णोवर्णोवर्णा ऋ ॠ ऌ च
एदैदोदौदिति ज्ञेयाः षोडशेहादितः स्वराः  ७

कखौ गघौ ङचछजा झञौ टठडढा णतौ
थदौ धनौ पफबभा मः स्पर्शाः पञ्चविंशतिः  ८

यरौ  लवौ चतस्रोऽन्तस्थाश्च≍कशषस÷पहाः
षडूष्माणो विसर्गोऽनुस्वारो ळो नास्यपञ्चकम्  ९

अन्यत्राविद्यमानस्तु यो वर्णः श्रूयतेऽधिकः
आगम्यमानतुल्यत्वात् स आगम इति स्मृतः  १०

प्रकृतिस्थस्य शब्दस्य स्थाने यस्यापरो भवेत्
स्वगुणान्तरं नापेतः स विकारीह तत्समः ११

प्रकृतिस्थस्तु यः शब्दः संहितायां न दृश्यते
तत्स्थाने च न शब्दोऽन्यः स लोपी नश्वरोपमः १२

स्नादिसिद्धः परो ह्रस्वादसंयोगपरस्तु यः
अनुस्वारो द्विमात्रोऽसावन्यः सर्वोऽपि मात्रिकः १३

ह्रस्वात् परो वसनस्थः पदाध्यायेऽनुनासिकः
द्विमात्रिको मात्रिकस्त्वन्यः संहितायां तथाखिलः १४

स्वरितग्राह्यनुस्वारो द्विमात्रो मात्रिकात् परः
दीर्घादध्यर्धमात्रः स्याद् वैरूप्ये मात्रिकं परम् १५

द्विमात्र उत्तमो ह्रस्वादध्यर्धो व्यञ्जनान्तरः
दीर्घादनन्तरस्तद्वन्मात्रिको व्यञ्जनान्तरः १६

द्विमात्रा य व ला ह्रस्वादध्यर्धा व्यञ्जनान्तराः
दीर्घपूर्वात् परो रेफो मात्रिका इति निर्णयः १७

स्वरितग्राह्यनुस्वारस्तथा पूर्वाङ्ग उत्तमः
तयोर्द्वित्वे परं रूपं पूर्वाङ्गश्चेत् तदेव तु १८

तथा पूर्वाङ्गभूताश्च ल य वा रेफपूर्वकाः
ह्रस्वादनन्तरास्त्वेते यद्यन्तस्था परास्तथा १९

आकाशवायुप्रभवः शरीरात् समुच्चरन् वक्त्रमुपैति नादः
स्थानान्तरेषु प्रविभज्यमानो वर्णत्वमागच्छति यः स शब्दः १

तमक्षरं ब्रह्म परं पवित्रं गुहाशयं सम्यगुशन्ति विप्राः

स श्रेयसा चाभ्युदयेन चैव सम्यक् प्रयुक्तः पुरुषं युनक्ति २

स्थानमिदं करणमिदं प्रयत्न एष द्विधानिल स्थानम्
पीडयति वृत्तिकारः प्रक्रम एषोऽथ नाभितलात् ३

तत्र स्थानकरणप्रयत्नेभ्यो वर्णास्त्रिषष्टिः ४

तत्र वर्णानां केषां किं स्थानं किं करणं प्रयत्नश्च कः केषामित्युच्यते ५

तत्र स्थानं तावत् ६

अकुहविसर्जनीयाः कण्ठ्याः ७

हविसर्जनीयावुरस्यावेकेषाम् ८

जिह्वामूलीयो जिह्व्यः ९

कवर्गावर्णानुस्वारजिह्वामूलीया जिह्व्या एकेषाम् १०

सर्वमुखस्थानमवर्णमेके ११

इचुयशास्तालव्याः १२

ऋटुरषा मूर्धन्याः १३

रो दन्तमूलस्थानमेकेषाम् १४

लृतुलसा दन्त्याः १५

वकारो दन्तोष्ठ्यः १६

सृक्वस्थानमेके १७

उपूपध्मानीया ओष्ठ्याः १८

अनुस्वारयमा नासिक्याः १९

कण्ठनासिक्यमनुस्वारमेके २०

यमाश्च नासिक्यजिह्वामूलीया एकेषाम् २१

एदैतौ कण्ठतालव्यौ २२

ओदौतौ कण्ठोष्ठ्यौ २३

ञमङणनाः स्वस्थाना नासिकास्थानाश्च २४
द्विवर्णानि संध्यक्षराणि २५
सरेफ ऋवर्णः २६
एवमेतानि स्थानानि २७

२
करणमपि १
जिह्व्यतालव्यमूर्धन्यदन्त्यानां जिह्वा करणम् २
कथमिति ३
जिह्वामूलेन जिह्व्यानाम् ४
जिह्वामध्येन तालव्यानाम् ५
जिह्वोपाग्रेण मूर्धन्यानाम् ६
जिह्वाग्राधःकरणं वा ७
जिह्वाग्रेण दन्त्यानाम् ८
शेषाः स्वस्थानकरणाः ९
इत्येतत् करणम् १०

३
प्रयत्नो द्विविधः १
आभ्यन्तरो बाह्यश्च २
आभ्यन्तरस्तावत् ३
स्पृष्टकरणा स्पर्शाः ४
ईषत्स्पृष्टकरणा अन्तस्थाः ५
ईषद्विवृतकरणा ऊष्माणः ६
विवृतकरणाः स्वराः ७

तेभ्य ए ओ विवृततरौ ८
ताभ्यामै औ ९
ताभ्यामप्याकारः १०
संवृतोऽकारः ११
इत्येषोऽन्तःप्रयत्नः १२

४

अथ बाह्यः १
वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदाना अघोषाः २
वर्गयमानां प्रथमेऽल्पप्राणा इतरे सर्वे महाप्राणाः ३
वर्गाणां तृतीयचतुर्था अन्तस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ संवृतकण्ठा नादानुप्रदाना घोषवन्तः ४
वर्गयमानां तृतीया अन्तस्थाश्चाल्पप्राणा इतरे सर्वे महाप्राणाः ५
यथा तृतीयास्तथा पञ्चमाः ६
आनुनासिक्यमेषामधिको गुणः ७
शादय ऊष्माणः ८
सस्थानेन द्वितीयाः ९
हकारेण चतुर्थाः १०
एष बाह्यः प्रयत्नः ११

५

तत्र स्पर्शयमवर्णकारो वायुरयःपिण्डवत् स्थानमभिपीडयति १
अन्तस्थवर्णकारो वायुर्दारुपिण्डवत् २
ऊष्मस्वरवर्णकारो वायुरूर्णापिण्डवत् ३

६

एवं व्याख्याने वृत्तिकाराः पठन्ति अष्टादशप्रभेदमवर्णकुलमिति १

अत्र

ह्रस्वदीर्घप्लुतत्वाच्च त्रैस्वर्योपनयेन च

अनुनासिकभेदाच्च संख्यातोऽष्टादशात्मकः

इति २

एवमिवर्णादयः ३

ॡवर्णस्य दीर्घा न सन्ति ४

तं द्वादशप्रभेदमाचक्षते ५

यदृच्छाशक्तिजानुकरणा वा यदा स्युर्दीर्घास्तदा तमप्यष्टादशप्रभेदं ब्रुवते ६

संध्यक्षराणां ह्रस्वा न सन्ति ७

तान्यपि द्वादशप्रभेदानि ८

छन्दोगानां सात्यमुग्रिराणायनीयानां ह्रस्वानि पठन्ति ९

तेषामप्यष्टादशप्रभेदानि १०

अन्तस्था द्विप्रभेदा रेफवर्जिताः ११

सानुनासिका निरनुनासिकाश्च १२

रेफोष्मणां सवर्णा न सन्ति १३

वर्ग्यो वर्ग्येण सवर्णः १४

७

एष क्रमो वर्णानाम् १

तत्रैषां स्थानकरणप्रयत्नानां व्याकरणप्रसिद्धिरुच्यते २

इह यत्र स्थाने वर्णा उपलभ्यन्ते तत्स्थानम् ३

येन निर्वर्त्यन्ते तत् करणम् ४

प्रयतनं प्रयत्नः ५

८

तत्र नाभिप्रदेशात् प्रयत्नप्रेरितः प्राणो नाम वायुरूर्ध्वमाक्रामन्नुरःप्रभृतीनां स्थानानामन्यतमस्मिन् स्थाने प्रयत्नेन विधार्यते
स विधार्यमाणो वायु स्थानमभिहन्ति
तस्मात् स्थानाभिघाताद् ध्वनिरुत्पद्यते
आकाशे सा वर्णश्रुतिः
स वर्णस्यात्मलाभः १

ध्वनावुत्पद्यमाने यदा स्थानकरणप्रयत्नोः परस्परं स्पृशन्ति सा स्पृष्टता २

यदेषत् स्पृशन्ति तदेषत्स्पृष्टता ३

दूरेण यदा स्पृशन्ति सा विवृतता ४

सामीप्येन यदा स्पृशन्ति सा संवृतता ५

इत्येषोऽन्तः प्रयत्नः ६

स इदानीं प्राणो नाम वायुरूर्ध्वमाक्रामन् मूर्ध्नि प्रतिहतो निवृत्तो यदा कोष्ठमभिहन्ति तदा कोष्ठेऽभिहन्यमाने गलबिलस्य संवृतत्वात् संवारो जायते विवृतत्वाद्विवारः ७

तौ संवारविवारौ ८

तत्र यदा कण्ठबिलं संवृतं भवति तदा नादो जायते ९

विवृते तु कण्ठबिले श्वासो जायते १०

तौ श्वासनादौ ११

अनुप्रदानमिति आचक्षते
अन्ये तु ब्रुवते अनुप्रदानमनुस्वानो घण्टानिर्ह्रादवत् १२

तत्र यदा स्थानाभिघातजे ध्वनौ नादोऽनुप्रदीयते तदा नादध्वनिसंसर्गाद् घोषो जायते १३

यदा श्वासोऽनुप्रदीयते तदा श्वासध्वनिसंसर्गादघोषः १४

सा घोषवदघोषता १५

महति वायौ महाप्राणः १६

अल्पे वायावल्पप्राणः १७

साल्पप्राणमहाप्राणता १८

महाप्राणत्वादूष्मत्वम् १९

यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रो भवति तदा गात्रस्य निग्रहः कण्ठबिलस्य चाणुत्वं स्वरस्य च वायोस्तीव्रगतित्वाद् रौक्ष्यं भवति तमुदात्तमाचक्षते २०

यदा तु मन्दः प्रयत्नो भवति तदा गात्रस्य स्रंसनं कण्ठबिलस्य महत्त्वं स्वरस्य च वायोर्मन्दगतित्वात् स्निग्धता भवति तमनुदात्तमाचक्षते २१

उदात्तानुदात्तस्वरसंनिपातात् स्वरितः २२

इत्येवं प्रयत्नोऽभिनिर्वृत्तः कृत्स्नः प्रयत्नो भवति २३

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च २४

स्पृष्टत्वमीषत्स्पृष्टत्वं संवृतत्वं तथैव च
विवृतत्वं च वर्णानामन्तःकरणमुच्यते २५

कालो विवारसंवारौ श्वासनादावघोषता
घोषोऽल्पप्राणकालैव महाप्राणः स्वरास्त्रयः
बाह्यं करणमाहुस्तान् वर्णानां वर्णवेदिनः २६

इत्यापिशलिशिक्षा समाप्ता